मोथत्यलत्यात्मने ऽपि द्वौ पारयति कल्पते ॥ ३१ ॥
राघते लायते शक्तौ स्फुरते विभवत्यपि ।
(६२) स्युरुद्यमे ऽवगुरते दृहत्यडति गूर्यते ॥ ३२ ॥
उद्गारयतउद्घुङ्क्तउद्यच्छत्यात्मने ऽप्यदः ।
(६३) हेडति क्षायति वटत्यपि गुध्यति वण्डते ॥ ३३ ॥
मण्डते वेष्टते वेष्टे मगध्यति मुरत्यपि ।
कृणत्ति गुण्डयति च परिक्षेपति चात्मने ॥३४॥
(६४) वेष्टनायां वटयति वेष्टयत्यादयो ऽपि च ।
(६५) निरुणद्धि निगृह्णाति चात्मने द्वौ निरोधने ॥३५॥
(६६) आञ्छत्याकर्षआकर्षत्यायच्छत्यात्मने ऽप्यदः ।
(६७) धृष्णोति चाधिकुरुते धर्षयत्यपि धर्षति ॥३६॥
जयत्येवं विजयते जयत्यभिभवत्यपि ।
अभ्यस्ति च प्रसहते पराभावयतीति च ॥३७॥
विमानयत्यभिभवे क्लीनाति न्यक्करोति च ।
लङ्घयत्याक्रमति च तरत्याक्रम्यतीति च ॥३८॥
(६८) विशेषयत्यतिशये ह्यतिशेते विशेषति ।
उत्कर्षयत्यश्नयति विशिनष्टि प्रकर्षति ॥३९॥
(६९) चित्रीयते लिङ्गयति विस्माययति चाद्भुते ।
(७०) स्यातां कुहयते विस्मापयते हेतुतो ऽद्भुते ॥४०॥
(७१) धूनयति धुवति चलयति धूनोति धवति धुनाति च धुनोति ।
चत्वारि चात्मने कम्पयति क्ष्मापयति वाजयति ॥४१॥
द्रालयति ह्मालयति द्रलयति ह्मलयतीति स्युः ।
तद्वत्प्रेङ्खोलयति प्रकम्पने डोलयत्यपि च ॥४२॥
(७२) विलोडयति मथ्नाति मथत्येवं खजत्यपि ।
गाहते मन्थने लुभ्यत्यपि लोटति मन्थति ॥४३॥

(७३) खेदत्युत्त्रासने भाययसेवं दरयत्यपि ।
(७४) प्रयोजकाद्भये भीपयते भापयते ऽपि च ॥ ४४ ॥
(७५) क्ष्मायते कम्पते त्वङ्गत्येजतीर्ते च वेपते ।
केपते ग्लेपते कम्पे गेपते विजते दश ॥४५॥
(७६) ताडने ताडयति च हन्ति विध्यति तपडते ।
प्रहरत्यात्मने सट्टयति स्फिट्टयतीति च ॥४६॥
आघट्टयति चास्फालयति जासयतीत्यमी ।
आहते ऽकर्मकत्वे स्यात् स्वकीये ऽङ्गे च कर्मणि ॥४७॥
(७७) युध्यते संप्रहरते युद्धे जजति जञ्जति ।
संमर्दयति संग्रामयतीमे कलहायते ॥४८॥
(७८) करोत्युपाजेऽन्वाजेभ्यामात्मने ऽपि बलार्पणे ।
(७९) विक्रम्यते वीरयते पराक्रमतइत्यपि ॥४९॥
प्रगल्भते शूरयते पराक्रम्यतइत्यसौ ।
ओजायते विक्रमते विक्रमे ऽष्टपदी भवेत् ॥५०॥
(८०) अरुष्करोत्यात्मने ऽपि व्रणयत्यङ्गचूर्णने ।
(८१) गोकर्तृकायां हिंसायां मस्तुम्पति मुदा भवेत् ॥५१॥
(८२) हिनस्ति संज्ञपयति स्नुवते हन्ति तर्वति ।
तोपति च श्रोपतीत्यपि तूर्वति धूर्वति ॥५२॥
तोफति त्रोफति रुणत्सपि तुम्पति त्रुम्पति ।
तुम्फति त्रुम्फति शसत्यूर्वत्यर्वति नोजति ॥५३॥
नभते भर्वति मपत्येवं नश्नाति नभ्यति ।
तोभते शर्वति चपत्यपि तुभ्नाति तुभ्यति ॥५४॥
शूर्यते शेपति तुपत्यपि रोपति रेपति ।
धूर्यते यूपति तुफत्यपि दूर्वति धूर्वति ॥५५॥
प्रमापयत्यर्दयति निर्वापयति रिप्यति ।

तृणेढि मारयति च श्लथत्यर्दीति गूर्यते ॥५६॥
क्रथत्युज्जासयति च श्रायत्यपि युध्यति।
तृहत्युध्नुटयति च क्षिणाति च कृणाति च ॥५७॥
प्रतिष्किरत्यालभते तृणात्युन्मथतीति च।
क्षिणोति छ्यति दूणाति कृणोति क्षिणोति च ॥५८॥
अष्टौ क्षणोति मीनाति कृणातीत्यात्मने ऽप्यमी।
कुन्थति पुन्थति लुन्थति रिशति रुशति हिंसति स्तृहति॥५९॥
तृंहति स्तम्भति स्तृणति च चुम्बयति श्रथति च क्रथति।
सर्भति मेदति द्रणाति स्फिट्टयति च हिंसयत्यमी चृतति॥६०॥
षण्णवतिर्हिंसायामुक्ताः शिष्टाश्च ये गणे द्रयाः।
केवालीखेवालीगेवालीमस्मसाशब्दाः ॥६१॥
अर्थालीवर्पालीपर्वालीमसमसाश्च तथा।
गतिसंज्ञा हिंसायामष्टोद्दिष्टाः करोतेः प्राक् ॥६२॥
(८३) वस्तयते गन्धयते लुम्बति लुम्बयति चार्दनार्थाः स्युः।
ओहति तोहति दोहति तद्वच्चुम्बति च तुम्बयसेते॥६३॥
(८४) दम्फति दफति दुनोति व्यथयति दुःखयति तपति पीडयति।
क्लिश्नाति दूनयत्यपि धूपायति खेदयत्याद्याः ॥६४॥
दुःखाकरोति तुदति च करोति वैकल्यमुदाद्रिभ्यो ऽर्थी।
आत्मने ऽपि ग्लपयति ग्लापयत्यपि पीडने ॥६५॥
रोठते लोठते कुथ्नात्यपि मन्थति बाधते।
एठते हेठते तत्र लोटते क्लेशयत्यपि ॥६६॥
शण्डते शूलाति रुजत्यूपत्यामयतीति च।
(८५)*उनक्ति मोटयति च भञ्जयत्यपि मोटति ॥६७॥
मुटति म्रदते मर्दे मृद्गाति च पिनष्टि च।

---

* अनक्ति लि०।

क्षुन्ते क्षुणत्ति संचूर्णयति पाशयतीति च ॥६८॥
(८६) पंसयति ध्वंसयति च नक्कयति च धक्कयत्येते ।
जम्भयति क्षपयति च नाशयति च नाशनार्थाः स्युः॥६९॥
(८७) उन्मूलयत्युज्जहाति चोत्पाटयति वै समाः ।
उत्खनत्यात्मने ऽप्येते पश्चोज्जटयतीति च ॥७०॥
(८८) भङ्गे पराभवत्युक्ते पराभवतइत्यम् ।
(८९) जयत्युत्कर्षसंप्राप्तौ तथा विजयते पदम् ॥७१॥
इति क्षत्रियचेष्टावर्गः ।

---

अथ वैश्यचेष्टावर्गः ॥

(१) कृपते कृपतीत्येते कृषौ क्षुरति कर्षति ।
रदत्येवं विलिखति हलति स्युः खनत्यपि ॥७२॥
(२) बीजाकरोत्युप्तकृष्टौ(३)स्याद्द्वितीयाकरोति च ।
शम्बाकरोति द्विगुणाकरोति द्विः कृषौ त्रयम् ॥७३॥
(४) तृतीयात्रिगुणाभ्यां च करोति त्रिः कृषौ मतम् ।
आख्यातानि खनत्यादीन्यूहनीयानि चात्मने ॥७४॥
(५) हलिग्रहे हलयति हलिरुक्तो महद्धलम् ।
(६) वपत्युप्तौ प्रकिरति वपते (७) ऽप्यथ रोपणे ॥७५॥
शूलयत्यपि संरोहयति संरोपयत्यपि ।
(८) ध्रुवति ध्रवति स्थैर्ये स्थिरीभवति खायति ॥७६॥
वदत्येते च खदति मूलति प्रतितिष्ठति ।
(९) पंयत्येते वायति च शोषे शुष्यति शुष्यति ॥७७॥
आश्यायते शुण्ठयति लड्डते(१०)ऽप्यथ तर्पति ।
उनत्ति शीकते शर्धत्यपि मर्षति सिञ्चति ॥७८॥
आर्द्रीकरोति च ज्ञेयमात्मने ऽपि चतुष्टयम् ।

सीकयति तेमयतीत्यादि जेपति सूदति ॥७९॥
सचते पर्पति गरत्यपि मेपति मर्पति ।
घरत्युक्षति सेकें स्युर्नेपत्यपि च शिप्यति ॥ ८० ॥
गडत्येवं मेहति च तथा मिन्वति निन्वति ।
क्लिद्यति स्तिम्यति स्तीम्यत्यार्द्रीभावे च तिम्यति ॥८१॥
(११) स्युः पुंसयति पुष्णाति दृहत्यादि च वर्धने ।
(१२) संचये संविभर्तीति संभरत्यात्मने त्रयम् ॥ ८२ ॥
संचिनोति खलत्येवं संभाण्डयतइत्यपि ।
राशीकरोत्यात्मने द्वौ संवहति समूहते ॥ ८३ ॥
(१३) उच्चिनोति शिलत्युञ्छे सिलत्युच्चिनुते तथा ।
उञ्छति ध्रासयति च ध्रज्ञात्यपि तथेपति ॥ ८४ ॥
(१४) अवहन्तीति वैतुष्यकरणे कण्डयत्यपि ।
फलीकरोति वितुषीकरोतीत्यात्मने द्वयम् ॥ ८५ ॥
परापुनात्यात्मने ऽपि प्रस्फोटयति तत्समम् ।
(१५) मिमीते मायते माने माहते मस्यतीति च ॥ ८६ ॥
शुल्वयत्यपि संमाति(१६)संभवे संभवत्यपि ।
पणते दीव्यति तथा ऽऽत्मने व्यवहरत्पदः ॥८७॥
व्यवहारे च पनते (१७) परिवर्तयतीत्यपि ।
विक्रीणीते निमयते ऽवक्रीणीते विक्रीयते ॥ ८८ ॥
सत्याकरोत्यात्मने ऽपि तुल्यौ सत्यापयत्यपि ।
क्रीणाति चैवं क्रीणीते विसारयति च क्रये ॥८९॥
(१८) निष्णाति दक्षते चापि नैपुण्ये निपुणत्यपि ।
(१९) अर्जने त्वर्जयति च तथैवार्जति सर्जति ॥ ९० ॥
(२०) कलयत्यपि संख्याति संख्याने गणयत्यपि ।
सख्ये कलने(२१)तुल्यौ त्वाहन्ति गुणयत्यमू ॥ ९१ ॥

(२२) उत्पुंसयति तु प्रोञ्छे प्रोञ्छत्युत्सारयत्यपि ।
(२३) वण्डति व्युष्यति तथा विभजत्यात्मने ऽप्ययम् ॥ ९२ ॥
विभागे वण्टयति च विभाजयखवमाति च ।
(२४) न्यासे निक्षिप्यति न्यस्यत्येवं परिदधाति च ॥ ९३ ॥
निक्षिपत्यात्मने चोपनिदधाति चतुष्टयम् ।
(२५) तिरोदधात्यपिदधात्यन्तर्धौ पिदधाति च ॥ ९४ ॥
तिरस्करोति व्यस्यति छन्दत्यपवरत्यपि ।
आवृणोति व्यवदधात्यूर्णोत्यतिदधाति च ॥ ९५ ॥
संवृणोति स्तृणोत्येतान्यात्मने ऽपि त्रयोदश ।
अपवारयति च्छादयति स्थगयतीति च ॥ ९६ ॥
कूलति त्वचतीत्येवं कुम्बयत्यपि कुम्बति ।
ह्रगति ह्लगतीत्येते शुडति स्थुडतीति च ॥ ९७ ॥
स्तृणोति तिरयत्येवं स्तृणुते गोपयत्यपि ।
अपोर्णुते त्वपोर्णोति(२६)विवृतौ विवृणोति च ॥९८॥
तथैवापवृणोति द्वावात्मने *निरिणाति च ।
(२७) अपेक्षते ऽभ्यर्थयते भिक्षते ऽर्दति नाथति ॥९९॥
याच्ञायां वनुते मार्गत्यमी चनति याचति ।
चदतीत्यात्मने ऽपि स्यु(२८)रेषते मार्गयत्यपि ॥१००॥
मार्गत्यप्यश्नाति गवेषयत्यन्वीक्षते ऽपि च ।
अन्वेषते च पयति चिनोतीत्यात्मने ऽप्यदः ॥ १०१ ॥
अन्वेषणे मृगयते मृग्यतीत्यपि केचन ।
(२९) प्रतिदत्ते विनयते निर्यातयति तत्समम् ॥१०२॥
विश्रोत्सर्गे व्ययति च तथा विनयते ऽपि च ।
(३०) दोहानुकूल्ये दुग्धे(३१)गौः प्रस्नुते प्रस्रवे स्वयम् ॥१०३॥

---

* विवृणाति नि० ।

रिणक्ति दोग्ध्यात्मने ऽपि अपूरयति दोहने ।
(३२) क्षरणे स्तेपते श्चोतत्यपि क्षरति तेपते ॥१०४॥
रीयते स्यन्दते चैव (३३) स्रवति स्नौति तु स्रवे ।
(३४) विष्णाति रेचयति च विप्रयुङ्क्ते च रेचति ॥१०५॥
विश्लेषणे स्युर्विश्लेषयति यौति वियौति च ।
(३५) मिश्रयत्यपि संयौति संपृक्ते संपृणक्ति च ॥१०६॥
मिश्रणे संसृजति च श्रीणातीत्यात्मनि ऽप्यदः ।
(३६) सङ्गतौ सामियतीति सङ्गच्छति समृच्छति ॥१०७॥
अकर्मकास्त्वात्मने ऽमी संबध्नाति मिलत्यपि ।
समवैति व्यतिसृजत्येवं सचतउच्यति ॥१०८॥
(३७) आतञ्चत्यातञ्चने च (३८) विलम्बत्यासजत्यपि ।
आलम्बने ऽथ शैथिल्ये श्रन्थते चिल्लतीति च ॥१०९॥
(३९) ओलण्डयत्युन्नयतउत्क्षिपत्यात्मने ऽप्यदः ।
उलण्डयति चोत्तभ्नात्युत्तभ्नोत्युत्तरत्यपि ॥११०॥
उत्तम्भयति चोत्क्षिप्यत्युत्क्षेपे दोलयत्यपि ।
(४०) आनीतावानयत्येतावात्मने ऽप्याहरत्यपि ॥१११॥
(४१) संमार्जयति संमार्ष्टि तथा परिसमूहति ।
समूहते च संमार्गे (४२) उपदेग्ध्युपलिम्पति ॥११२॥
पदद्वयं चात्मने ऽपि गोमयत्युपलेपने ।
(४३) संधुक्षयति संदीपयतीन्धे ज्वालयत्यपि ॥११३॥
संधुक्षणे ज्वलयतिच्छर्दते च्छर्दयत्यपि ।
(४४) पाके श्रीणाति पचतीत्यात्मने श्रपयत्यपि॥११४॥
रन्धयत्यपि विक्लेदयति साधयतीति च ।
श्राति श्रायति विक्लिद्यत्यपि राध्यति रध्यते ॥११५॥
पच्यते क्वथ्यते चैते पाके स्युः कर्मकर्तृके ।

(४५) ऋजते भर्जते भ्राष्ट्रे तूपभृज्जति भृज्जते ॥११६॥
(४६) शूलाकरोत्यात्मने ऽपि शूलपाके पदं मतम् ।
(४७) द्रवीकृतौ लीनयति लयति द्रावयत्यपि ॥११७॥
लालयत्यपि लाययत्यपि लापयतीत्यमी ।
(४८) द्वौ संदधात्यभिषुणोत्यात्मने द्वौ च शुच्यति ॥११८॥
तथा चुच्यत्यभिषवे (४९) संस्कृतौ संस्करोत्यदः ।
आत्मने(५०)प्रतियन्ते तु स्यादुपस्कुरुते पदम् ॥११९॥
(५१) स्वादते स्वदते रुच्यां स्वदते रोचते ऽपि च ।
इति वैश्यचेष्टावर्गः ।

---

अथ शूद्रचेष्टावर्गः ॥

(१) वयते वयति स्यूतावूयते(२)ऽथ विषीव्यति ॥१२०॥
स्यूतौ निषीव्यति तथा परिषीव्यति सीव्यति ।
(३) तक्ष्णोति तक्षति तनयति त्वक्षति तक्षणे ॥१२१॥
तनूकरोत्यात्मने ऽपि परिवासयतीति षट् ।
(४) उत्तेजयति तीक्ष्णत्वे संक्ष्णुते क्ष्णौति निश्यति ॥१२२॥
निशिनोति निशीशांसत्यात्मने ऽपि मतं द्वयम् ।
(५) लुनाति लुम्पति तथा छिनत्तीत्यात्मने त्रयम् ॥१२३॥
त्रुटति छोटयति च चुटति छुटतीति च ।
छेदने वर्धयति च छयति वृश्चति कृन्तति ॥१२४॥
चतुर्दश त्रोटयति-द्यति छेदयतीत्यमी ।
(६) खोटति क्षुभ्नाति च्छेदे छिद्यते कर्मकर्तृके ॥१२५॥
(७) भिन्ने विदारयति च भिनत्ति द्यति मुण्डति ।
बिलति स्फोटयति च दृणात्याखण्डयत्यपि ॥१२६॥
मुस्यति छिद्रयति च दारयत्यपि भेदने ।

(८) वहति श्रेपति श्लेपत्यपि प्रोषति चूर्यते ॥२२७॥
तापयत्योषति तपत्यपि प्लुष्यति कुण्डते।
दाहे फूटयति प्लोपसमी(९)तत्र तु गर्हिते ॥ २२८ ॥
दन्दह्यते दन्दहीति दन्दग्धीति पदत्रयम्।
(१०) प्रोचति स्तेनयति च चुरण्यति च रुण्टति ॥२२९॥
स्तेये चोरयति ग्लोचयति कोजति खोजति।
मुष्णाति लुण्टयति च मूषत्यपहरत्यदः ॥२३०॥
आत्मने(११)ऽप्यास्कन्दतीति जर्हतीति बलाद्धृतौ।
(१२) प्रसह्यात्मने ऽप्येष हठतीति बलात्कृतौ ॥२३१॥
(१३) धूर्तक्रियायां शठति द्राघते मह्वते त्रयम्।
(१४) निष्कुष्णाति च निष्कर्षे निष्कर्षति च तूलति॥२३२॥
स्यान्निष्कुलाकरोत्येतदात्मने (१५) चात्र सव्यधे।
डाज्निष्पत्रासपत्राभ्यां करोति कुरुते परे ॥२३३॥
(१६) संदानयति बध्नाति मूर्च्छत्यन्दति कीलति।
पाशयत्यन्तति जुटति सिनुते च कश्चते ॥२३४॥
कचते टङ्कयति च योजयत्यपि मव्यति।
काञ्चते ग्रन्थयति च सिनाति च सिनोति च॥२३५॥
संयच्छत्यात्मने पद् स्यु नह्यत्यपि दधाति च।
पुनातीति मवते च बन्धे मवति योजति ॥२३६॥
(१७) स्तम्भते स्कम्भते स्तम्भे वस्यत्यपि च पीलति।
स्तभ्नोति प्रतिबध्नाति स्तभ्नाति स्तम्भयत्यपि॥२३७॥
स्कभ्नोति चैव स्कभ्नाति स्तुभ्नोति स्कम्भयत्यपि।
स्तुभ्नाति चैव स्कुभ्नाति स्कुभ्नोत्येतानि षोडश॥२३८॥
(१८) साहसिक्ये प्रकुरुते(१९)दुःखयत्यघयत्यपि।
कष्टायते दुष्कृते ऽमी(२०)भत्यवति तु दूष्यति॥२३९॥

विघ्ने विहन्त्यन्तरेति प्रत्यूहत्यात्मने ऽप्यदः ।
विघ्नयत्यन्तरयति विच्छिन्ते विच्छिनत्ति च ॥२४०॥
(२१) सन्ताने सन्तनोतीति निर्वहत्यात्मने द्वयम् ।
तथा सञ्चयते सन्तानयतीति चतुष्टयम् ॥२४१॥

इति शूद्रचेष्टावर्गः ।

इति द्वितीयकाण्डः ॥



# आख्यातचन्द्रिकायाम्

## तृतीयकाण्डः ॥

प्रकीर्णकसनाद्यन्तनानार्थान्यात्मनेपदे ॥ १ ॥
तदन्यस्मिन् विभागश्च संगृह्यन्ते ऽत्र वर्गशः ।

### अथ प्रकीर्णकवर्गः ॥

यानि पूर्वमसंगत्या नैवाख्यातान्यचक्षत ॥ २ ॥
वक्ष्यन्ते तानि वर्गे ऽस्मिन् प्रकीर्णाख्ये यथास्मृति ॥
(१) विभाति व्युच्छते व्युष्टे प्रभाति विविशत्यपि ।
(२) श्विन्दते श्वेतते त्रीणि स्युः शुक्लत्वे ऽवदायति ॥ ३ ॥
(३) रज्यति त्रीणि रजति लोहितायति चात्मने ।
शोणतीति च रञ्जिन्नि(४)श्यामत्वे श्यामलायते ॥ ४ ॥
नीलायते नीलति च तथा श्यामायते पदम् ।
(५) विन्दत्यवयवे भिन्दत्यवयौति सटत्यपि ॥ ५ ॥
(६) संघाते झटति श्रोणत्येवं जटति पूलति ।
गोष्टते लोष्टते श्लोणत्यपि त्रसति पिण्डते ॥ ६ ॥
श्लोकते हुण्डते पिण्डयति पूलयतीत्यपि ।
शण्डते ऽथो मुस्तयति स्त्यायत्यश्नोति चाक्षति ॥ ७ ॥

इति प्रकीर्णकवर्गः ।

### अथ सनाद्यन्तवर्गः ॥

(१) धातोस्तुमर्थादिच्छायां सनि रूपं बुभूषति ।

शिशिक्षिपतइत्यादि–पूर्ववच्चात्मनेपदम् ॥ ८ ॥
(२) सुपो मान्ताव्ययान्यस्मात्कचित्काम्यतिकर्मणः ।
आत्मनस्तु तदिच्छायामर्थे शब्दद्वयं भवेत् ॥ ९ ॥
पुत्रकाम्यति पुत्रीयत्यृक्काम्यत्यृच्यतीति दिक् ।
(३) एवं कर्मण आधारादाचारादुपमार्थकात् ॥ १० ॥
कचित्पुत्रीयति च्छात्रं मञ्चे सौधीयतीति दिक् ।
(४) उपमानात्तथा कर्तुराचारार्थे क्यङि किपि ॥ ११ ॥
द्वे रूपे भवतो यद्वद् गर्दभो ऽश्वायते ऽश्वति ।
(५) क्यङ्योजोऽप्सरसोर्नित्यं पयआदेस्तु वा सलुक् ॥१२॥
कन्या ऽप्सरायते त्वोजायते ऽहिः कं पयायते ।
पयस्यते तथा ऽन्यस्मात्सलोपादि समूह्यताम् ॥१३॥
(६) च्व्यर्थे भृशादेर्हलोपे क्यङ्यच्व्यन्ताद्भृशायते ।
सुमनायतइत्यादिरूपाण्यूह्यानि सर्वतः ॥ १४ ॥
भृशः शघ्रतृपद्रेहद्रेहद्वर्चो ऽथ दुर्मनाः ।
सुमना उन्मना ओजो ऽभिमनाश्चपलः शुचिः ॥ १५ ॥
मन्दरेफन्मद्रभद्रपण्डितताण्डरकण्डराः ।
उत्सुको हरितो नीलः फेनः शीघ्रो भृशादयः ॥ १६ ॥
(७) तत्रैव डाज्लोहितादेः क्यषि वा चात्मनेपदम् ।
विग्लोहितायतीत्यादि डाचः पटपटायति ॥ १७ ॥
लोहितजिह्मश्यामाः सुखदुःखे धूमचर्मगर्वश्च ।
हर्षो मूर्छा निद्रा कृपा च करणाद्यो ऽप्यटत्करणात् ॥१८॥
(८) कष्टात्सत्राच्च कक्षाच्च कृच्छ्राद्गहनतो ऽपि च ।
कष्टायतेऽभृतयः पापार्थे क्रमणे क्यङि ॥ १९ ॥
(९) तं वर्तयति रोमन्थाद्रोमन्थायतइत्यदः ।
(१०) वाष्पोष्मफेनादुद्वान्ताविदं वाष्पायते मुखम् ॥ २० ॥

(११) सुखादेः स्यादनुभवत्यर्थे दुःखायतेमुखाः ।
सुखदुःखास्त्रकृपणकरुणालीककृपवत् ॥ २१ ॥
कृच्छ्रप्रतीपसोढाः स्युरमी दश सुखादयः ।
(१२) शब्दादिषु कृतौ शब्दायते वैरायतेमुखाः ॥ २२ ॥
शब्दादयस्तु सूत्रोक्ता वार्तिकोक्ता अटादयः ।
अटाट्टशीकाकोटाश्च सोटापृष्ठौ च दुर्दिनम् ॥ २३ ॥
पोटापृष्ठा च सुदिनं नीहारश्चेत्यटादयः ।
(१३) तपस्यतीत्यादिकं तु प्रायः पूर्वं प्रदर्शितम् ॥ २४ ॥
(१४) कण्ड्वादेर्यकि कण्डूयत्यात्मने ऽपि हृणीयते ।
असूयतीत्यादिकं च प्रायः प्रागेव कीर्तितम् ॥ २५ ॥
(१५) धातोर्हलादेरेकाचः पौनःपुन्ये भृशे यङि ।
चेक्रीयतेप्रभृतयो (१६) न भृशार्थे शुभे रुचः ॥ २६ ॥
(१६) बहुलं लुकि तत्रापि बोभोत्यादिकमूह्यताम् ।
(१७) सूचिसूत्र्यमूर्णुमूत्र्यर्त्यशिभ्यश्च यङिष्यते ॥ २७ ॥
सोसूच्यते ऽटाट्यते ऽरार्यतइत्यादिकं ततः ।
(१८) गत्यर्थेभ्यस्तु कौटिल्ये लुपादेर्भावगर्हणे ॥ २८ ॥
यङि जङ्गम्यते लोलुप्यतइत्यादिकं भवेत् ।
(१९) प्रयोजकस्य व्यापारे धातुमात्रात्कृतेर्णिचि ॥ २९ ॥
भावयत्यादि तत्रोक्तं णिचश्चेत्यात्मनेपदम् ।
(२०) सुबन्ताण्णिचि धात्वर्थे बहुलं भादि चेष्टवत् ॥ ३० ॥
(२१) तत्करोतीति मुण्डादेः वक्तुं मुण्डयतीति दिक् ।
(२२) स्थूलादेस्तु तदाचष्टे स्थवयत्यादिकं भवेत् ॥ ३१ ॥
(२३) सत्यार्थवेदादापुक् च स्यात्सत्यापयतीति दिक् ।
(२४) श्वेताश्वादश्वतरतो लोपो ऽश्वतरयोर्णिचि ॥ ३२ ॥
गालोडिताह्वारकयोर्लुप्येते इतकौ तथा ।

श्वेतयत्यश्वयति गालोडयत्याह्वरयति ॥ ३३ ॥
(२५) णिच् कृतत्वचवर्णेभ्यस्तं गृह्णात्यर्थइष्यते ।
अत्वं च हलिकल्योः स्या(२६)न्निष्याने रूपशब्दतः ॥३४॥
(२७) विमोके संयमे पाशा(२८)चूस्ताद्विहनने भवेत् ।
(२९) भोजने तन्निष्टत्तौ च व्रतशब्दाण्णिचो विधिः ॥ ३५ ॥
(३०) परिधाने समाच्छादे वस्त्रा(३१)ल्लोम्नो ऽनुमार्जने ।
(३२) सेनातिक्रामत्यर्थे ऽश्वयति हस्तयतीति च ॥ ३६ ॥
(३३) सेनाशब्दात्तृतीयान्तादभियाने तु सः प च ।
(३४) वीणाया उपगाने स्या(३५)त्सन्नाहे वर्मणो भवेत् ॥३७॥
(३६) चूर्णादवध्वंसने ऽर्थे(३७)तूलाण्णिजवकोषणे ।
(३८) श्लोकादुपस्तुतौ(३९)त्वास्याः परेऽच्छेदनइष्यते ॥ ३८ ॥
(४०) णिङ्ङ्गाच्चन्निरसने विध्यस्तपतत्रादिकम् ।
(४१) पुच्छादुदसने णिङ् स्यात्पर्यासे व्यसने ऽपि च ॥३९॥
(४२) चीवरात्संचये चार्थे परिधाने च णिङ् भवेत् ।
(४३) भाण्डात्समाचिनोत्यर्थे णिङ् संभाण्डयते हि दिक्॥४०॥
(४४) निर्दिष्टार्थे कृतस्तस्मादुपसर्गादितो ऽपि च ।
कंसं घातयतीत्यादिसिद्धये ऽन्यो णिजुच्यते ॥ ४१ ॥
प्रत्यक्षमिव कंसादेः साधनत्वेन मन्यते ।
उक्तं हि भर्तृहरिणा महाभाष्यानुसारिणा ॥ ४२ ॥
शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥ ४३ ॥

इति सनाद्यन्तवर्गः ।

---

## अथ नानार्थवर्गः ॥

अथ नानार्थधातूत्थान्याख्यातानीह कानिचित् ।
यथामति प्रदर्श्यन्ते व्यक्तं भूवाद्यनुक्रमात् ॥ ४४ ॥
गणे ऽवधारणात्क्वापि सूत्रे तेन विशेषणात् ।
क्वाप्यर्थान्तरनिर्देशादनेकार्था हि धातवः ॥ ४५ ॥
(१) भवतीत्येष सत्तायां प्राप्तिसम्पत्तिजन्मसु, ।
आद्योपलम्भे पर्याप्तौ सामर्थ्ये प्रभवत्ययम्, ॥ ४६ ॥
सम्भावनायां माने च साहित्ये सम्भवत्यसौ, ।
शक्तिप्राप्त्योर्विभवति, प्राकट्ये व्युद्भवत्यपि, ॥ ४७ ॥
(२) ग्रन्थप्रतिष्ठालिप्सासु गाधते(३)नाधतीति तु ।
याच्ञोपतापैश्वर्येषु(४)तेष्वाशिषि च नाधते ॥ ४८ ॥
(५) स्तवे ऽभिवादने चापि वन्दते (६) भन्दते पुनः ।
सौख्यकल्याणयो(७)र्मोदमदस्वप्नगतिस्तुतीः ॥ ४९ ॥
आह मन्दतइत्येत (८) दृदते दानधारणे ।
(९) क्रीडायामूर्दते माने(१०)ह्लादते ह्लादशब्दयोः ॥ ५० ॥
(११) कुन्थति पुन्थति लुन्थति मन्थति मान्थसमी पञ्च ।
हिंसासंक्लेशनयो(१२)श्चन्दत्याह्लाददीपनयोः ॥ ५१ ॥
(१३) गतिमाङ्गल्यशास्त्रेषु सेधति (१४) स्थैर्यहिंसयोः ।
खद(१५)त्यर्दति गतियाच्ञाहिंसासु संमतम् ॥५२॥
(१६) कन्दति क्रन्दति क्लन्दत्याह्वाने रोदने त्रयम् ।
(१७) द्रेकते ध्रेकते शब्दोत्साहयो(१८ श्रकते पुनः ॥ ५३ ॥
तृप्तौ च प्रतिघाते च(१९ गत्याक्षेपे तु मङ्कते ।
कैतवे(२०)द्राघते त्वेतत्सामर्थ्यायामयोर्मतम् ॥ ५४ ॥
(२१) गतौ लङ्घतइत्येतन्निवृत्तौ भोजनस्य च ।
(२२) शोषणे चालमर्थे च राखत्योखति लाखति ॥ ५५ ॥

द्राघति भ्रामतीत्येते(२३)गतौ त्वङ्गति कम्पने ।
(२४) मश्नते धारणोच्छ्रायपूजने(२५)ष्वथ कश्नते ॥ ५६ ॥
दीप्तिबन्धनयो(२६)र्गत्यामीजते कुत्सनेऽपि च ।
(२७) शाठ्यमेदनदम्भेषु मुञ्चते मचते पदम् ॥ ५७ ॥
(२८) स्थानार्जनोपार्जनगतिष्वृजेः स्यादर्जते पदम् ।
(२९) स्पारसंपर्चनकौटिल्यमतिष्वम्भोविलेसने ॥ ५८ ॥
तारे शब्दे क्रोचतीति(३०)याच्ञागत्योस्तथाऽञ्चते ।
(३१) तयोश्च पूजने चाञ्च(३२)त्यजति क्षेपणे गतौ ॥५९॥
(३३) कौटिल्याल्पीभवनयोः कुञ्चति क्रुञ्चतीत्युभे ।
(३४) मूर्छत्येष समुच्छ्राये मोहे स्याद(३५)सर्जतीति तु ॥६०॥
व्यथने पूजने(३६)हिंसात्राणयोस्तुञ्जतीत्ययम् ।
(३७) शब्दे गजति मादे च(३८)ह्रिण्डते ऽनादरे गतौ ॥६१॥
(३९) अतिक्रमे च हिंसायामट्टते(४०)मुण्ठते शुचौ ।
पलायने च(४१)कटति वर्षावरणयोर्गतौ ॥ ६२ ॥
(४२) शठत्ययं विशरणे गतौ त्वव्यवसादने ।
(४३) बाल्ये च परिभाषायां लटती(४४)त्यथ पेटति ॥६३॥
शब्दसङ्घातयो(४५)र्मर्दे निवासे च मठत्ययः ।
(४६) हठतीति बलात्कारे प्लुतौ शङ्कन्दने ऽपि च ॥६४॥
(४७) हिंसासंक्लेशयोः पेठ(४८)त्यथो शठति कैतवे ।
तयो(४९)श्चाथो लुण्ठतीति गतावालस्यएव च ॥६५॥
(५०) तेपते क्षरणे कम्पे(५१)ग्लेपते दैन्यकम्पयोः ।
(५२) अवस्रंसे प्रमादे च स्रंसते(५३)लम्बते पुनः ॥६६॥
शब्दे चावस्रंसने च(५४)मानसे च जपत्ययम् ।
(५५) हिंसाभाषणयोः शोभ(५६)त्यत्र दीप्तौ च शुम्भति ॥६७॥
(५७) शब्दे रणति गत्यां तु घटादावेष पठ्यते ।

(५८) पैणति प्रेरणाश्लेषगमनेषु पदं त्रिषु ॥ ६८ ॥
(५९) लौहित्ये शोणति गतौ(६०)संभक्तौ वनति ध्वनौ ।
(६१) दीप्तिकान्तिगतीष्वर्थ विष्वर्थेषु कनसदः ॥ ६९ ॥
(६२) गतौ च शब्दसंभक्त्योरमतीति प्रयुज्यते ।
(६३) क्रमते क्रम्यते स्यातां तायनोत्साहवृत्तिषु ॥ ७० ॥
(६४) नयते रक्षणे गत्यां (६५) व्ययते तु तयोरपि ।
आदानदानहिंसासु (६६) क्नूयते क्लेदशब्दयोः ॥७१॥
(६७) पूयते स्याद्विशरणे दुर्गन्धे ( ६८ ) चाथ तायते ।
पालने स्फीततायाञ्च (६९) प्रेप्सागत्योश्च हर्यति ॥७२॥
(७०) भ्रंशे ऽदने गलति च (७१) शब्दसंख्यानयोर्द्वयोः ।
कलते ( ७२ ) शलते त्वेष चलने संवृतावपि ॥७३॥
(७३) भलते भल्लते हिंसादानयोः परिभाषणे ।
(७४) चलने सञ्चये चोक्तः खलतीति (७५) फलत्यदः ॥७४॥
आवितश्चेद्विशरणे निष्पत्तौ स्यादनावितः ।
(७६) अलते ऽलति भूषायां पर्याप्तौ वारणे द्वयम् ॥ ७५ ॥
(७७) गतौ जग्धौ च चरति ( ७८ ) संघाते रुजि शूलति ।
(७९) हिंसाकरणयोः कृण्वेः कृणोति भाषणे ऽपि च ॥७६॥
(८०) पराभिभूतायुत्कर्षे जयसन्ते त्वकर्मकः ।
(८१)स्वाम्यर्थदानावगतिप्रवेशयाच्ञागतीच्छाश्रुतितृप्त्यवाप्तीः७७
आलिङ्गरक्षाद्युतिभागवृद्धिहिंसाक्रियाश्चावतिरेष वक्ति ।
(८२) धुक्षते धिक्षते संदीपनक्लेशनजीवने ॥ ७८ ॥
(८३) हिंसाविश्राणनगतिष्वीषते स्यात्तु ( ८४ ) दक्षते ।
शैघ्र्यवृद्ध्योर्घटादौ तु तदेव गतिहिंसयोः ॥ ७९ ॥
(८५) स्यान्मौण्ड्येज्योपनयनव्रतादेशेषु दीक्षते ।
(८६) जिज्ञासने च विद्याया ग्रहणे चापि शिक्षते ॥ ८० ॥

(८७) कासते कफजे शब्दे दीप्तौ चायं भयोगतः ।
(८८) द्राङ्क्षति ध्राङ्क्षति ध्वांक्षतीच्छायां घोरवाशिते ॥८१॥
(८९) अक्षसक्ष्णोति सङ्घाते व्याप्तावप्य(९०)थ मर्पति ।
सहने सेचने(९१)श्लेषक्रीडयोर्लसतीत्यदः ॥ ८२ ॥
(९२) जर्जति द्वे चर्चति संतर्जने परिभाषणे ।
(९३) उरसा गमने दाने वृद्धावपि च मोहते ॥ ८३ ॥
(९४) क्ष्वेदते स्नेहने मोक्षे (९५) दीप्तौ स्वादे च रोचते ।
(९६) प्रमादे स्रंसते चावस्रंसने ध्वंसने गतौ ॥ ८४ ॥
(९७) क्षञ्जते दानगत्योः स्याद्(९८)व्यथते चलने भये ।
(९९) कम्पे विलसने चार्थे कम्पते चलतीत्ययम् ॥ ८५ ॥
(१००) ह्मलतीति पदं गत्यां तदेव चलने मितम् ।
(१०१) हर्षग्लेपनयोर्मित्त्वान्मदेर्मदयतीति णौ ॥ ८६ ॥
(१०२) वलतीत्येप धान्यस्यावरोधे प्राणने ऽपि च ।
(१०३) बन्धुक्रियायां संस्याने कोलती(१०४)त्यथ होलति ॥८७॥
स्याद्धिंसासंवरणयोः (१०५) क्रोशसाह्वानरोदने ।
(१०६) सीदति स्याद्विशरणे गतावप्यवसादने ॥ ८८ ॥
(१०७) संपर्चने तु कौटिल्ये प्रतिष्टम्भे विलेखने ।
तारे शब्दे कोचतीति ज्वलादेरितरस्य च ॥ ८९ ॥
(१०८) मिथ्याज्ञाने ऽनवस्थाने भ्रमति भ्राम्यतीत्युभे ।
*स्यायतेः प्रागात्मने ऽपि(१०९)गतिशुद्ध्योस्तु धावति॥९०॥
(११०) पदं भूषणपर्याप्तिवारणेष्वलतीत्यदः ।
(१११) दीप्त्यादानगतिष्विष्टमसती (११२) त्यथ चीवति॥९१॥
स्यादादाने संवरणे (११३) ऽप्यथ हिंसनमेधयोः ।

---

* इतउत्तरं(१२६)स्त्यायतेः प्राग् वक्ष्यमाणा धातवः,आत्मनेपदेऽपि भवन्तीत्यर्थः ।

मेदत्येत(११४)न्मेधति तु संगमे च तयोरपि ॥ ९२ ॥
(११५) कुत्सायां सन्निकर्षे च नेदती(११६)त्यथ वेणति ।
चिन्तानिशामनगतिवादित्रग्रहबुद्धिषु ॥ ९३ ॥
(११७) निशामने ऽर्चने चाय(११८)त्यथ स्पशति बाधने ।
स्पर्शने(११९)ऽहतीसेतत्स्यन्दने भापणे धृतौ ॥९४॥
(१२०) क्षपत्यादानसंहृत्योः हिंसायां नेत्र चात्मने ।
(१२१) यजतीति तु देवार्चादानसङ्गतिकर्मसु ॥ ९५ ॥
(१२२) ह्वयति स्पर्धने शब्दे(१२३)वपत्युप्तौ च मुण्डने ।
(१२४) दाने निरसने दीप्तावप्यवाक्षेपतीत्यदः ॥ ९६ ॥
(१२५) शब्दसङ्घातयोर्धात्वोः स्त्याय(१२६)त्यथ धमत्यदः ।
कृशानुफूत्कृतौ शब्दे(१२७)ऽप्युपतापे स्वरत्यपि ॥९७॥
(१२८) ऋच्छेर्गतीन्द्रियलयमूर्तिभावेषु ऋच्छति ।
ऋच्छादेशे तदेवार्तेः शिति स्यात्प्रापणे गतौ ॥९८॥
(१२९) सवतीति पदं धात्वोः प्रसवैश्वर्ययोर्गतौ ।
(१३०) प्लुवे तरत्युत्तरणे(१३१)स्कन्दतीति तु शोषणे ॥९९॥
गत्या(१३२)मथो नमत्येतन्नमस्कारे ऽपि शब्दने ।
(१३३) सेवने सचते तद्वत्समवाये सचत्यपि ॥ १०० ॥
(१३४) वदते दृप्तिविषयभासनोत्साहदर्शिषु ।
(१३५) सहते ऽभिभवे क्षान्तौ गतिवृद्ध्योः श्वयत्ययम् ॥१॥
(१३६) पवते रसणादौ च सोमस्य मरुतो गतौ ।
(१३७) निर्णेतृत्वेन भजने तिप्यते स्वप्रकाशने ॥ २ ॥
(१३८) देवार्चासङ्गतिकृतिमैत्रीषु पथिकर्तृके ।
धात्वर्थे मन्त्रकरणे ऽकर्मके चोपतिष्ठते ॥ ३ ॥
परस्मैपदमन्यत्र लिप्सयोपास्यतौ न वा ।

इति भ्वादिगणः ।

(१३९) गतिगन्धनयोर्वाति(१४०)हन्तीति गतिहिंसयोः॥४॥
(१४१) ग्रहणे ऽप्युपहन्त्येतदशुचीकरणे ऽपि च ।
(१४२) वेतीति कान्तिगमनप्रजनासनखादने ॥ ५ ॥
(१४३) गतिशासनयोः कस्त (१४४)ईर्ते तु गतिकम्पयोः ।
(१४५) ईट्टे स्तुतौ गतिनायां याञ्चप्रेरणभोजने ॥ ६ ॥
(१४६) व्यक्तवाचि भवेचष्टे दृष्टौ(१४७) यौति तु मिश्रणे ।
अमिश्रणे ऽपि(१४८)सौतीति प्रसवैश्वर्ययोर्मतम्॥७॥
(१४९) ज्ञानविश्वासयोः प्रत्येत्य(१५०)ध्येत्यधिगमे स्मृतौ।
(१५१) भक्षे जक्षिति हसने(१५२)दीधीते भासि देवने ॥८॥
(१५३) वेवीते वेतितुल्यार्थ,श्छान्दसावेति भाष्यकृत् ।
(१५४) सवीति तौति वृद्ध्यर्थे हिंसायां पूरणे गतौ ॥९॥
इत्यदादिगणः ।
(१५५) जुहोति हविरासेके दाने ऽप्येके (१५६)पिपर्ति तु ।
पालने पूरणे(१५७) दीप्तौ क्षरणार्थे जिघर्त्यदः ॥१०॥
(१५८) बभस्ति भर्त्सने दीप्तौ(१५९)मिमीते मानशब्दयोः।
(१६०) नेनेक्ति पोषणे शौचे(१६१)बिभर्ति धृतिपोषयोः ॥११॥
तयोर्दधाति दाने चाभिदधात्युक्तिबन्धयोः ।
श्रद्दधाति तु विस्रम्भस्पृहयोः पञ्च चात्मने ॥१२॥
इति जुहोत्यादिगणः ।
(१६२) विजिगीषागतिक्रीडाव्यवहारद्युतिस्तुतीः ।
दीव्यतीत्याह (१६३)गत्यां तु शोषणे सीव्यतीत्यदः॥१३॥
(१६४) क्रस्यति ह्वरणे दीप्तौ(१६५)व्रीडतीत्येष चोदने ।
लज्जायां(१६६)नाघ हिंसायां त्वरणे चापि दूयते॥१४॥
(१६७) धूर्यते गूर्यते चोभे गतिहिंसनयोर्मते ।
(१६८) हिंसायां च वयोहानौ धूर्यते जूर्यते पदे ॥ १५ ॥

(१६९) हिंसायां शूर्यते स्तम्भे(१७०)ऽप्यथ संराद्धिहिंसयोः ।
रध्य(१७१)त्युपक्रमज्ञानस्वीकारे भतिपद्यते ॥१६॥
(१७२) विक्लित्तिक्षणवृद्ध्यादौ राध्यत्येतदकर्मकम् ।
(१७३) हर्षणे मोचने दृप्य(१७४)त्यथ ग्लानौ च ताम्यति ॥१७॥
काङ्क्षायामपि(१७५)खेदे तु श्राम्यत्येष तपस्यपि ।
(१७६) मोचने स्विद्यति स्नेहे(१७७)गात्रस्थौल्ये ऽपि मेद्यति ॥१८॥
इति दिवादिगणः ।
(१७८) पीडने मन्थने स्नाने सन्धाने ऽभिपुणोत्यदः ।
आत्मने(१७९)ऽप्यथ वृद्धौ च हिनोतीति गतावपि ॥१९॥
(१८०) सङ्घाते चाश्नुते व्याप्तौ(१८१)स्तृणोति प्रीतिपालने ।
इति स्वादिगणः ।
(१८२) जुषते सेवने प्रीतौ (१८३) विजते चलने भये ॥२०॥
(१८४) युद्धनिन्दादानहिंसाकत्थनेषु रिफत्यदः ।
(१८५) शब्दोपकृत्योः कुणति(१८६)चृतति ग्रन्थहिंसयोः ॥२१॥
(१८७) गतिकौटिल्यहिंसासु द्रुणती(१८८)त्यथ खण्डने ।
छेदे खुरति(१८९)भीमार्थशब्दयोर्घुरतीत्यदः ॥ २२ ॥
(१९०) ऐश्वर्यदीप्त्योः स्फुरति(१९१)किलति श्वैत्यखेलयोः ।
(१९२) इलति प्रेरणे स्वप्ने(१९३)प्यथाक्षेपप्रमर्दयोः ॥ २३ ॥
मुट(१९४)त्यथ कुडत्येतद्बाल्ये च घसने मतम् ।
(१९५) निवासगत्योः क्षियति(१९६)गतौ स्थैर्ये ध्रुवत्यदः॥२४॥
इति तुदादिगणः ।
(१९७) दीप्तिदेवनयोश्छृन्ते छृणत्तीति(१९८)तृणत्त्यदः ।
तृन्ते हिंसानादरयो(१९९)र्विनक्ति चलने भये ॥२५॥
(२००) भनक्ति प्रसरणगतिकान्तिव्यक्तिषु कीर्तितम् ।
इति रुधादिगणः ।

(२०१) साहसिक्यप्रकथनोपयोगेषु च सेवने ॥ २६ ॥
पदं प्रकुरुते(२०२)ऽथाधिकुरुते ऽभिभवे तथा ।
क्षान्तौ(२०३)विकुरुते शब्दकर्मके ऽर्थे ऽप्यकर्मकः ॥२७॥
(२०४) ऊर्युरर्युररीभ्यश्च करोति कुरुते पदे ।
विस्ताराङ्गीकरणयोः(२०५)प्रतियत्ने तु वैकृते ॥२८॥
उपस्कुरुतइत्येतद्वाक्याध्याहारयोरपि ।
(२०६) हृष्टभक्षार्थिनीडार्थिविहंगमचतुष्पदाम् ॥ २९ ॥
आलेखने ऽपस्कुरुत आत्मनेपदसुड्विधेः ।
इति तनादिगणः ।
(२०७) कान्तितर्पणयोः प्रीणा(२०८)त्यथ श्रीणाति मिश्रणे ॥३०॥
पाके(२०९) चाथ पृणातीति पालने पूरणे ऽपि च ।
(२१०) श्रृणाति प्रतिहर्षे ऽपि मोचने(२११)चाथ पूरणे ॥३१॥
मुष्णाति द्वे च प्लुष्णाति मोचने स्नेहने विषु ।
(२१२) गृह्णात्येतदुपादाने ज्ञाने गृह्णीतइत्यपि ॥ ३२ ॥
(२१३) अवष्टभ्नात्यवष्टभ्नोसन्तिकालम्बनार्थकौ ।
इति क्र्यादिगणः ।
(२१४) दर्शनाङ्कनयोर्लक्षय(२१५)सयोर्जयतीति तु ॥ ३३ ॥
यत्नमाणनयोः (२१६) कुट्टयति च्छेदनभर्त्सने ।
(२१७) गतसंस्कारयोः शाठयति श्वाठयति द्वयम् ॥ ३४ ॥
(२१८) भाषार्हिंसाबलादाननिकेतेषु च पञ्चमु ।
पदं तुञ्जयतीत्याह तथा पिञ्जयतीत्यपि ॥ ३५ ॥
(२१९) मण्डयत्येष भूषायां हर्षे पुस्तयतीति च ।
(२२०) स्यादादरानादरयोस्तथा बुस्तयतीत्यदः ॥ ३६ ॥
(२२१) मार्गसंस्कारगत्योः स्याद्राजयत्येतदर्थयोः ।
(२२२) ज्ञापने मारणादौ च ज्ञपयत्येनदीरितम् ॥ ३७ ॥

(२२३) छेदने पूरणे चापि वर्धयत्येतदर्थयोः ।
(२२४) संश्लेषणे च ग्रहणे पदं स्पाशयते भवेत् ॥ ३८ ॥
(२२५) चेतनायां वेदयते तथाऽऽख्याने विश्रामने ।
(२२६) निकारे चाप्युपस्कारे यातयत्येतदीरितम् ॥३९॥
(२२७) निर्यातयति वैरस्य शुद्धौ न्यासार्पणे हृतौ ।
(२२८) छेदने स्नेहने चापि हरणे वासयत्यदः ॥ ४० ॥
(२२९) संपर्चने मोहने च रेचयत्यपि रेचति ।
(२३०) श्रद्धायां चोपकरणे तानयत्युपतापने ॥ ४१ ॥
(२३१) शौचालंकारयोर्मार्जयति मार्जति चेरितम् ।
(२३२) लवने क्षालने चार्थे स्यात्पल्पूलयतीत्यदः ॥ ४२ ॥
(२३३) वर्णक्रियायां विस्तारे गुणोक्तौ वर्णयत्यदः ।

इति चुरादिगणः ।

(२३४) ऋतीयते घिग्घृणयोः(२३५)पूजाद्धर्मोर्महीयते ॥४३॥
(२३६) भोजने तन्निवृत्तौ च पदं अगदतीत्यदः ।

इति नामधातवः ।

(२३७, रोषे च वैमनस्ये च मन्तूयति पदं विदुः ॥४४॥
(२३८) माधुर्यपूजयोर्वल्गूयति(२३९)स्यात्तु हृणीयते ।
रोषमन्दाक्षयोः(२४०)स्यात्प्रे धौर्त्ये लेख्यति लोख्यति ॥४५॥

इति कण्ड्वादयः ।
इत्यनेकार्थवर्गः ।

---

अथात्मनेपदपरस्मैपदवर्गः ॥
(१) भावे कर्मणि सर्वस्माद्धातोः स्यादात्मनेपदम् ।
ङिज्यस्तथाऽनुदात्तेद्भ्यो भूयते ध्यायते ऽयते ॥४६॥
(२) क्रियाव्यतिहृतौ तद्वयतिस्ते व्यतिभिन्दते ।

(३) शब्दार्थहसावहहगतिहिंसार्थकान्न तत् ॥४७॥
व्यतिभ्यां जल्पति हसत्येति हन्तीत्यमूर्दिशः ।
नात्र संमवहन्ते संमहरन्ते निषेधनम् ॥ ४८ ॥
(४) परस्परेतरान्योन्योपपदाच्चात्मनेपदम् ।
अन्योन्यस्य व्यतिलुनन्त्येषा दि(५)द्विपराद्विशेः ॥४९॥
(६) परिव्यवेभ्यः क्रीणाते(७)र्जयतेर्विपरापरात् ।
(८) आङो दाञो विकासस्वास्यप्रसारणयोर्न हि ॥५०॥
(९) गमेः क्षमायां णोराङि नुपृच्छ्योः(१०)क्रीडतेरनोः।
पर्याङ्भ्यांच(११)समोऽकूजे(१२)र्जिज्ञासायांशकेःसनः॥५१॥
(१३) अपस्किरो(१४)ऽथो हरतेर्गतिताच्छील्य(१५)आशिषि।
नाथः(१६)शपेस्तु शपथे(१७)ऽथो निर्णीतौ प्रकाशने॥५२॥
प्रीतज्ञायामावसंविप्रा (१८) दुवो ऽनूर्ध्वचेष्टने ।
(१९) देवार्चासंगतिकृतिमैत्रीषु पथिकर्तृके ॥ ५३ ॥
धात्वर्थे मन्त्रकरणे ऽकर्मके चोपपूर्वकात् ।
वा लिप्सायां(२०)समः प्रच्छगम्पृच्छिस्वृश्रुवेत्तिः॥५४॥
दृशो ऽर्तेश्चाकर्मकेभ्य(२१)आङ्पूर्वाभ्यां यमेर्हनः ।
(२२) उद्विभ्यां तपतेः स्वाङ्गकर्मकेभ्यो(२३)ऽप्ययास्यतेः॥५५॥
ऊहश्च सोपसर्गाद्वा(२४) ह्वो निसंव्युपपूर्वकात् ।
(२५) आङस्तु स्पर्धने(२६) सूचनावक्षेपणसेवने ॥ ५६ ॥
प्रतियत्ने प्रकथनोपयोगे साधने कृञः ।
(२७) अधेः प्रसहने(२८)र्वेस्तु शब्दकर्मण्यकर्मकात् ॥ ५७ ॥
(२९) पूजाचार्यकृतिज्ञानोत्मञ्जनेषु भृतौ व्यये ।
नीञो निगणने(३०) कर्तृस्थिते चामूर्तकर्मणि ॥५८॥
(३१) वृत्त्युत्साहस्फीततासु क्रमे (३२) स्तुद्वत्परोपयोः ।
(३३) ज्योतिरुद्गमने त्वाङो(३४) वेः पादविहृतार्थकात् ॥५९॥

(३५) आरम्भणार्थे प्रोपाभ्यां(३६)विभाषा ऽनुपसर्गकात् ।
(३७) अपह्नवे ऽकर्मकाच्च ज्ञो (३८) ऽनाध्याने मतेः समः ॥६०॥
(३९) यत्नोपसान्त्वनज्ञानासनेषूपनिमन्त्रणे ।
विमतौ चापि वदतेः(४०)समनुभ्यां त्वकर्मकात् ॥६१॥
(४१) व्यक्तवाचां सहोक्तौ च(४२)विमलापे विभाषया ॥६२॥
(४३) सृजेः श्रद्धायति स्यंश्च यथा मालां हि सृज्यते ।
(४४) श्रो ऽवा(४५)त्समः प्रतिज्ञाने(४६)चरेरुदि सकर्मकात्॥६३॥
(४७) समस्तृतीयायुक्ता(४८)त्स्वीकरणे तूपयच्छते ।
(४९) तृतीया चेच्चतुर्थ्यर्थे दाणः(५०)शिति शदे(५१)म्रियः॥६४॥
लुङ्लिङोश्च(५२)क्रुञि भागवदाशो यस्तु प्रयुज्यते ।
(५३) सनो ज्ञाश्रुस्मृदृशिभ्यो नानोज्ञ आङ्पतेः श्रुवः ॥६५॥
(५४) अयज्ञपात्रेषु युजेरजाद्यन्तोपसर्गतः ।
(५५) समः क्ष्णाते(५६)रनवने भुजेरपि च(५७)णेरणौ ॥६६॥
यत्कर्मणो स कर्ता चेद्भवेदाध्यानवर्जिते ।
यथा ऽऽरोह्यते हस्ती स्वयं दर्शयते नृपः ॥ ६७ ॥
(५८) भीस्म्योः प्रयोजकाद्भीतिस्मययो(५९)र्वञ्चनेर्गृधः ।
प्रलम्भने(६०)लियः पूजाभ्यक्कृत्योर्वञ्चने ऽपि च ॥६८॥
(६१) मिथ्याशब्दोपपदतः पौनःपुन्ये कृञो णिचः ।
(६२) फले च कर्त्रभिप्राये स्वरितेतो ञितो णिचः ॥ ६९ ॥
पचते कुरुते स्नानं कटं कारयते यथा ।
चुरादेरपि लक्षेर्यः स्वरितेत्त्वमनार्षकम् ॥ ७० ॥
(६३) अपाद्वदः(६४)समाङ्भ्यो यमेरग्रन्थगोचरे ।
(६५) ज्ञश्चोपसर्गरहिताच्छब्दान्तरगतौ तु वा ॥ ७१ ॥
णिजर्थे च यजेर्नित्यं सामान्योक्तौ न तत् स्मृतम् ।
यथा धरित्रीं दुदुहुः(६६)क्रमो ऽप्यनुपरापरात् ॥७२॥

(६७) क्षिपो ऽभिप्रत्यतिभ्य.(६८)प्राद्वहे(६९)र्मृषिपवहोः परेः ।
(७०) व्याङ्परिभ्यो रम(७१)उपाद्विभाषा चेदकर्मकः ॥७३॥
(७३) आहारचलनार्था ये गण्यन्ते ये त्वकर्मकाः ।
चित्तवत्कर्तृकास्तद्वच्चोपयत्येष पार्थिवम् ॥ ७४ ॥
(७४) प्रुद्रुमुरुबुधजनयुधेङ्नशिभ्यश्च णिचो यतः ।
(७५) न पादम्याङ्यमाङ्यसपरिमुहरुचिवद्वसः ॥ ७५ ॥
नृतिधेट्पिबतिभ्यश्च(७६)ण्यन्तात्तु विभाषया ।
(७७) द्युतादेर्लुङि(७८)द्वद्भ्यः स्यसनो(७९)र्लुटि च कल्पतेः॥७६॥
परस्मैपद(८०)मन्यस्मात्तथा शिष्टप्रयोगतः ॥७७॥

इत्यात्मनेपदपरस्मैपदवर्गः।

इति तृतीयः काण्डः ।

आख्यातचन्द्रिका समाप्ता ॥

# पदसूची ।

## ख

## ध

## फ



## ब

# य



# र

## ल

## व

## श

# पर्यायार्थसूची ।

## ख



## ग

# शुद्धपाठः, पाठभेदश्च ।

| | | |
|---|---|---|
| १ | १३ | (३)निर्वर्तते संभवति सिद्धौ |
| ३ | १५ | चोपलभते ऽवैति वेद्यते |
| | १६ | ध्याने गारयते. (पा) |
| | २१ | कुरुते पदे. (पा) |
| ४ | ६ | याचप्युपालोच्यते. |
| | २० | मिनुते मितौ. |
| | २६ | राध्यति चेक्षते. |
| ५ | ४ | स्फूर्छति प्रसमरत्यपि |
| | ७ | मयुच्छति त्रसति च. |
| | १५ | कुरुते पदे (पा). |
| | २१ | निघुर्वत्यात्म. |
| | २४ | 'प्रातौ जिमति' इति राघवनैषधीय १।५ श्लो. व्याख्याने पाठः |
| ६ | १० | गार्ध्ये. |
| | २० | कक्कते गर्दयति च (पा). |
| | २४ | लजते च. |
| ७ | ६ | शाम्यत्येवं श्लीकयति (पा). |
| | १९ | अपराध्यत्य. |
| | २४ | ते ऽथागृह्णा. |
| ८ | १२ | गर्वत्युत्सृन्ति च. |
| | २० | कृच्छ्रायते. |
| | २१ | जुगुप्सत ऋतीयते. |
| १० | २१ | भक्षाति चट. |
| ११ | २३ | तीर्थेतदात्मने. |
| १२ | २५ | रोति केङ्कारो (पा). |
| १५ | ९ | 'स्याद्धात्यपि' इति राघवनैषधीय १।१२३ श्लो. व्याख्यानपाठः |
| १६ | २५ | घिण्णते. |
| १७ | १५ | चत्वारि धात्मने. |
| १८ | ६ | पल्पूलयति. |
| २१ | १३ | ईर्ष्यसंलयति. |

२२ २० उच्छ्राये.
२३ ३ पन्थयतीयते.
२४ ४ 'उदयार्थाभिधायका:' इति राघवनैषधीय ९।३ श्लो. व्या. पाठः
२५ २३ ह्लालयति ह्मालयति ह्लयति.
२६ ७ स्मने कुट्टयति पिच्छयतीति च (पा).
१९ तूर्वति थूर्वति.
२७ ३ क्रथयत्यपि यु.
४ त्युन्मूलयति. त्युघाटयति (पा).
६ क्षेणोति छ.
७ स्पृणातीत्यात्मनेप्य.
१२ केवालीशेवालीकेवासीमस्मसाशब्दाः
१३ आतालीवपोलीपादोलीमसमसाभ्रतया.
२४ भनक्ति मोटय.
२८ २१ यदत्येते.
२९ १० समूहति समूहते ।
२० णीते च विक्रये.
३० ४ यत्यचचैति च (पा). मचयोति च
१० स्तृणात्येतान्या
३१ ८ स्मने ऽप्य.
१२ ने चा(३८)लभ्यत्यास
३२ ८ प्रतियत्ने तु स्या
२३ पति च भिनत्ति द्य
३४ ४ सन्ततौ सन्त(पा).
३६ १२ स्सलोपे वा दिगूह्य(पा).
१३ षर्पाङित्यर्थे भृद्या(पा).
३७ १९ श्लाक्कते याचि(पा).
३८ १९ धनस्वान्न सिध्यति(पा).
४० ५ यात्यमोचनदम्भेषु मुच्यते यच्यपोरिदम(पा).
२४ शब्दे चा.
४३ २४ मन्त्रणे चार्थे ऽफ(पा).
४५ ६ तौ घर्धनाम्नां याच्ञा प्रेरणपूरणे(पा).

४५ ४ विक्लित्तीक्षण, विपक्तिक्षण(पा).
४६ ५ ऊर्युरर्यूररी.
१९ छेदे च कुट्टने. (पा)
४७ १७ रोपे च वै मत्सरे च. (पा)
४८ ११ गति कौटिल्य आ. (पा)
१४ चांसङ्करणामे. (पा)
४९ १२ 'सनश्च स्मृद्दशिभ्यामनयोर्णौ ऽन्ताज्मतेः श्रुवः' 'दृशिभ्यां च नानोर्णौना' (पा)

---

## सूच्यां तत्र तत्र निवेशनीयानि ।

| | | | | | |
|---|---|---|---|---|---|
| आह्लादते | घ | २२ | स्तृणाति–ते. | पै | २५ |
| पुष्यति. | क्ष | ८२ | स्तृणुते. | पै | २५ |
| समूहति–ते | पै | १२ | स्पृणाति. | क्ष | ८२ |

'संघहति–ते. पै १२' इति पङ्क्तिः परिहार्या.

---

## सन्देहपदानि.

वर्गः. पर्यायः.

पा. १४ 'क्षिपति' इति द्विः पाठः
२७ 'संक्षेपे' इति 'संक्षिप्तौ' इति च द्विरर्थनिर्देशः

क्ष. ८२ 'करोति' इति द्विः पाठः
८४ 'करोति वैफल्यमुशद्धिश्योर्मी' । 'करोरि वैफल्यमुधाशुभ्योर्मी' । 'करोति यगुग्लुमुष्यतोश्योर्मी' (पा)

पै. १६ सम्भये सम्भयत्यपि.
२८ 'विनयते' इति द्विः पाठः

घ. १६ 'सिनाति च मिनोति च । संयच्छन्त्यारमने पद् स्युः' इत्युत्तरत्र 'मिनुते' इत्यस्य सिद्धौ 'मिनुते च पठ्यते' इति पुनः पाठः ॥ 'उदरत्यपि च संदाति पठ्यते' (पा)